तिरुमलतिरुपतिदेवस्थानानि

# सप्तगिरिः

## सचित्रमासपत्रिका

जनवरि २०२२
रू.५/-



SAPTHAGIRI (SANSKRIT)
ILLUSTRATED MONTHLY
Volume:8, Issue:10
January-2022, Price Rs.5/-
No. of pages-24

नित्याय निरवद्याय
सत्यानन्दचिदात्मने।
सर्वान्तरात्मने श्रीमद्
वेङ्कटेशाय मङ्गलम्॥
(श्रीवेङ्कटेश्वरमङ्गलाशासनम्)




३०-११-२०२१
तः ०८-१२-२०२१
पर्यन्तं
तिरुचानूरुक्षेत्रे
आचरित
श्रीपद्मावतीदेव्याः
ब्रह्मोत्सवानां
दृश्यमालिका

















## गीतामृतम्

न काङ्क्षे विजयं कृष्ण न च राज्यं सुखानि च।

किं नो राज्येन गोविन्द! किं भोगैर्जीवितेन वा।। (भगवद्गीता ३१/१)

अर्जुनः श्रीकृष्णपरमात्मानं प्रति, ''हे कृष्ण! अहं युद्धे विजयं नेच्छामि, राज्यं, ऐश्वर्यं, सुखानि च न कामये। हे गोपालक! भूपालक! वेदरक्षक! राज्यलाभेन, भोगसुखैः, जीवितेन वा किं प्रयोजनम् अस्माकम्'' इति। अर्थात् निष्प्रयोजकं युद्धं न करोमि इति ।

## सङ्कीर्तनम्

राजीवनेत्राय राघवाय नमो
सौजन्यनिलयाय जानकीशाय ।।राजीव।।

दशरथतनूजाय ताटकदमनाय
कुशिकसम्भवयज्ञगोपनाय
पशुपतिमहाधनुर्भञ्जनाय नमो
विशदभार्गवरामविजयकरणाय ।।राजीव।।

भरितधर्माय शूर्पणखाङ्गहरणाय
खरदूषणादिरिपुखण्डनाय
तरणिसम्भवसैन्यदक्षकाय नमो
निरुपममहावारिनिधिबन्धनाय ।।राजीव।।

हतरावणाय संयमिनाथवरदाय
अतुलितायोध्यापुराधिपाय
हितकरश्रीवेङ्कटेश्वराय नमो
विततवाविलिपाटिवीररामाय ।।राजीव।।

(अन्नमाचार्यसङ्कीर्तनम्)



# सम्पादकीयम्




## स ङ्क्रा न्तिः शं त नो तु वः







सूर्यः मेषादिषु राशिषु सञ्चरति। एकस्मिन् राशौ एकं मासमिति द्वादशसु मासेषु यदा सञ्चरति तदा एकः संवत्सरः इति जानीमः। सूर्यः वृश्चिकराशेः धनूराशिं प्रविशति यस्मिन्, तद्दिने धनुःसङ्क्रान्तिः इति वदन्ति। तथाच धनूराशौ यावता सूर्यः चरति स एव मासः धनुर्मासः इत्युच्यते। अत्यन्तपवित्रेऽस्मिन् प्रतिनित्यं उषःकाले उत्थाय स्नानादिकं कृत्वा परमात्मनः मुद्गान्ननिवेदनं कृत्वा ब्राह्मणेभ्यः भोजनं प्रदाय यः श्रीहरिप्रसादं भुङ्क्ते सः पुरुषः दीर्घायुष्मान्, उत्तमारोग्यवांश्च भवति। 'धनुर्मासे एकस्मिन् दिने कृतेन पूजनेन सहस्रवर्षात्मककाले कृतपूजनपुण्यफलं लभ्यते। जन्मजन्मान्तरेषु च वैष्णवत्वं प्राप्यते' इत्येतादृशाः धनुर्मासस्य महिमाः अग्निपुराणस्य ५१ तमे अध्याये प्रोक्ताः एव।

रेवातीरे स्थितः राजा सत्यसन्धः बहुविधपापभाक् चेदपि धनुर्मासीयपूजाफलेन निर्वाणं प्राप इत्यपि श्रूयते।

एवमेव विष्णुचित्तस्य सुकुमारसुन्दरपुत्री आण्डाळ् अपि अस्मिन्नेव मासे अनन्यभक्त्या श्रीकृष्णं प्रत्यहम् एकैकेन पाशुरेण प्रपूज्य श्रीकृष्णस्वरूपिणः श्रीरङ्गनायकस्य प्रीतिपात्रा सती तस्यैक्यम् अवाप। सा एव अद्यापि चूडिकुड्डुत्त नाच्चियार् इत्याख्यया स्वामिसन्निधौ पूज्यमाना शोभते। तया कृतं व्रतम् अद्यापि स्त्रीभिरनुष्ठीयते। अनया गोदादेव्या यानि पाशुराणि गीतानि तानि प्रतिवैष्णवदेवालयमपि प्रायः श्रूयन्ते एव। मासानां मार्गशीर्षोऽहं इति भगवद्वचनादेव मार्गशीर्षान्तर्गतस्यास्य भूयो वैशिष्ट्यं भाति।

किञ्च धनुर्माससमाप्तिकालादेव उत्तरायणकालः। तदा सूर्यस्य रथवेगः वर्धते। तेन उत्तरदिशः प्राप्यमाणहिमप्रकोपनेन अस्मान् रक्षति अयं कालः। कालेऽस्मिन् प्राणिकोटिषु जाठराग्निः यथायथं प्रकाशते इत्यतः शारीरिकतत्त्वं समीचीनं भवतीति आयुर्विज्ञानविदः भणन्ति। स एव कालः मकरसङ्क्रान्तिकालः इति महता सम्भ्रमेण अस्माभिराचर्यते पर्वरूपेण।

तथाच सङ्क्रान्त्यां लक्ष्मीः रङ्गवल्लीरथमारुह्य प्रतिगृहं समेत्य सर्वान् सुखयतु, स्वसहोदरसदृशदृष्टिं प्रसारयतु इति तां स्वागतीकुर्मः। आध्यात्मिकचिन्तने अग्रगामिनः कृत्वा सर्वाभ्यः प्रजाभ्यः इहपरानन्दान् प्रयच्छतु इति केशवं प्रार्थयामः, भक्त्या कीर्तयामः च।

तिरुमल-तिरुपतिदेवस्थानानां सचित्रमासपत्रिका

सम्पुटिः-०८ सञ्चिका-१०

*वेङ्कटाद्रिसमं स्थानं*
*ब्रह्माण्डे नास्ति किञ्चन ।*
*वेङ्कटेशसमो देवो*
*न भूतो न भविष्यति ॥*



# जनवरि २०२२

# सप्तगिरिः

श्री प्लवनामसंवत्सरस्य मार्गशिरकृष्णचतुर्दशी तः पुष्यकृष्णचतुर्दशीपर्यन्तम् - १९४३

गौरवसम्पादकः-
डा.के.एस्.जवहर् रेड्डि I.A.S.,
कार्यनिर्वहणाधिकारी, ति.ति.देवस्थानानि

प्रकाशकः - प्रधानसम्पादकः
डा॥ के.राधारमणः, M.A., M.Phil., Ph.D.,

सम्पादकः - डा॥ वि.जि.चोक्कलिङ्गम्, M.A., Ph.D.,

मुद्रापकः - श्री पि.रामराजु, M.A.,
प्रत्येकाधिकारी,
ति.ति.दे. मुद्रणालयः,
तिरुपतिः।

छायाचित्रग्रहणम् - श्री पि.एन्.शेखरः, छायाचित्रग्राहकः, ति.ति.दे.
श्री बि.वेङ्कटरमणः, सहायक-छायाचित्रग्राहकः, ति.ति.दे.



## सङ्केतः

प्रधानसम्पादकः,
सप्तगिरिः, ति.ति.देवस्थानानि
तिरुपतिः - ५१७ ५०७.
दूरभाषा - ०८७७ - २२६४५४३, २२६४३५९, २२६४३६०
सूचनानाम्, आक्षेपाणां च कृते सम्पर्कं कुर्वन्तु -
sapthagiri.helpdesk@tirumala.org

एका पत्रिका : रू.५/-
वार्षिकग्राहकत्वम् रू.६०/-



मुखचित्रम् – तिरुमल श्रीवेङ्कटेश्वरः
अन्तिमरक्षापुटः – श्री त्यागराजस्वामिनः



**सूचना**
मुद्रितलेखानां विचाराः लेखकानामेव। एतद्विषये अस्माकं दायित्वं नास्ति।
— *प्रधानसम्पादकः*

# मकरसङ्क्रमणम्

- श्री वै. उमामहेश्वरराव्
चरवाणी - ७२८६९८०१७७

मकरसङ्क्रमणं भारतीयानाम् अस्माकं जीवने महत्प्रभावजनकपर्वत्वेन मन्यमानं वर्तते। मकरसङ्क्रमणमिदं तिलपर्व इत्यपि निर्दिश्यत इति समे वयं जानीमः। आधुनिकयुगेऽस्मिन् कालः महत्त्वपूर्णान् अनेकान् परिणामान् प्रदर्शयन् तेजोवेगेन प्रसरति। तादृशे अस्मिन् काले जनाः वयमपि कालकृतपरिणामान् अवेक्ष्य तत्तदनुगुणं जीवनसरणिं परिवर्तयन्तः स्मः। कालस्य विभाजनं पूर्वैरस्माकं सकलज्ञैः महर्षिभिः निर्दिष्टम्। यत्र कालपरिणामे कारणभूतयोः सूर्यचन्द्रयोः ग्रहणं कृतम्। सूर्याधारिता कालगणना सौरमानमिति, चन्द्राधारिता कालगणना चान्द्रमानमिति च व्यवह्रियते। सौरमानानुसारं मेषादिद्वादशराशीन् प्रति सूर्यस्य प्रवेशदिनमेव सङ्क्रमणदिनमिति उच्यते। एतस्य इतोऽपि स्पष्टतार्थम् ग्रहणां राशौ प्रवेशकालः सङ्क्रमणम् इति वक्तुं शक्यते। अतः अनेकानि सङ्क्रमणानि जायन्ते। मेषतुलयोः सङ्क्रमणं विषुवसङ्क्रान्तिरिति, वृषभ सिंहकुम्भराशीनां विष्णुपदसङ्क्रान्तिः इति, मिथुनकन्या धनुमीनानां षडशीत्या-ननसङ्क्रान्तिरिति, कर्काटकस्य दक्षिणायनसङ्क्रान्तिरिति, मकरस्य उत्तरायणसङ्क्रान्तिरिति च व्यवह्रियते। एतेन ज्ञायते यत् कर्काटकसङ्क्रमणात् दक्षिणायणस्य, मकरसङ्क्रमणात् उत्तरायणस्य च प्रारम्भो भवति इति। अतः अस्मात् मकरसङ्क्रमणपुण्यकालात् परमपवित्रस्य उत्तरायणस्य आरम्भः। परमपुण्यप्रदेऽस्मिन् सङ्क्रमणपर्वणि आचर्यमाणं स्नान-दान-जप-तप-हवन-पूजा-तर्पण-श्राद्धादिकं कर्म अधिकं फलप्रदं स्यादित्युक्तं शास्त्रे। अन्यानां सङ्क्रमणपुण्यपर्वणाम् आचरणं कर्तुम् अशक्ताः जनाः इदमेकमेव सङ्क्रमणमाचरन्ति चेत् तत्फालमवाप्नुवन्तीति ज्ञातव्यम्।

इतः उत्तरायणकालः आरभते इत्यतः सूर्यः दक्षिणतः उत्तरदिशि चलति। सङ्क्रमणदिनादारभ्य षण्मासपर्यन्तम् उत्तरायणकालः एव। एतादृशे मकरसङ्क्रमणे सूर्यस्य मकरराशिप्रवेशानन्तरं चत्वारिंशद्घटिकाः यावत् पुण्यकालः इत्युक्तम्। अस्मिन् पुण्यकाले पुण्यतीर्थस्नानेन पुरुषार्थाः सिद्ध्यन्ति। विशेषतया गङ्गास्नानेन ब्रह्मलोकः प्राप्यते इति निगदन्ति। अशक्ताश्चेत् उष्णजलेन वा स्नानादिकम् आचरेयुः। अस्य पर्वणः अपरं नाम तिलपर्व इति। तिलपर्व इति प्रसिद्धेऽस्मिन् पर्वणि तिलतैलं लेपयित्वा स्नानं, तिलैः तर्पणं, तिलनिर्मितायाः धेनोः दानं, गुडनारिकेल



-कलायमिश्रिततिलस्य दानं, पीडापरिहारार्थं बालानामभिषेकं, विशेषतः मुद्गमिश्रितस्य अन्नस्य नैवेद्यं च कुर्वन्ति। केषुचिदन्येषु प्रान्तेषु वाताटानाम् उड्डयनमपि महता प्रमाणेन क्रियते। एतस्मिन्दिने लोकमातुः गोः पूजा भक्त्या विधीयते। शुभाशुभकर्मसु एवंरूपेण गोः पूजा अत्यन्तं श्रेयस्करीति ज्ञेयम्। ये केचित् प्रतिदिनं गोपूजनं कर्तुम् असमर्थाः न शक्नुयुर्वा ते परमपवित्रपर्वणि अस्मिन् गोपूजनं कुर्युरिति मुनीनां वचः। तत्रापि सङ्क्रमणस्य आचरणे क्वचित् प्रादेशिकानि वैशिष्ट्यानि सन्ति। सङ्क्रमणपर्व इदं त्रिदिवसमहोत्सवत्वेन परिपाल्यते। तत्रादौ भोगिमहोत्सवः।

### भोगिमहोत्सवः -

मकरसङ्क्रमणस्य पूर्वं ये त्रिंशद्दिवसाः ते धनुर्मासदिवसाः। तदा सूर्यः धनूराशौ वर्तते। एतद्धनुर्मासस्य त्रिंशद्दिनेषु भक्ताः प्रातरेव ब्राह्मीमुहूर्ते उत्थाय, स्नानादिकर्म कृत्वा, देवालयेषु पूजाः विधाय अर्चनादिकं कुर्वन्ति। शीतकालोऽयमित्यतः काष्ठैः अग्निज्वालनं कुर्वन्ति। अस्य ''भोगिमण्टलु' इति व्यवहारः। तस्मिन् अग्निज्वलने पुरातनवस्तूनि संस्थापयन्ति।

अयं भोगिमहोत्सवः



इन्द्रस्य प्रीत्यर्थं क्रियते इति वदन्ति। ''भोग'' इत्युक्ते सुखमित्यर्थः। गोदादेवी मकरसङ्क्रान्तेः पूर्वस्मिन् दिने श्रीरङ्गनाथस्वामिना वैवाहिकैक्यं प्राप्नोदित्यतः अस्य पर्वणः भोगिति व्यवहारः। प्रातरुत्थाय उष्णजलेन शिरःस्नानं कृत्वा गतेषु षण्मासेषु यत्पीडा सा पीडा परिहृतेति मन्यन्ते। अतः भोगि महोत्सवात्परं पुनः आनन्दात्मकः कालः आगतः इति सानन्दं भोगिपर्व इदमाचरन्ति जनाः। पश्चाच्च सङ्क्रान्तिः।

### मकरसङ्क्रान्तिः -

अस्मिन् दिने सूर्यः मकरराशौ प्रविशति। एतस्मात् दिनात् सूर्यकिरणेषु उष्णता वर्धते। प्रकृतिः क्रमेण उत्तेजिता भवति। प्रतिपर्व अपि कञ्चन ज्योतिश्शास्त्रसम्बन्धं चरति। तथा अदः पर्वापि किञ्चिद्गुह्यं गोपयति। तच्च ज्योतिश्शास्त्रसम्बद्धम्। मकरराशेः अधिपतिः शनिः। शनिः वातप्रधानग्रहः। वातप्रभावः न्यूनीकरणीयश्चेत् तैलस्य आवश्यता अस्ति। अत एव अस्मिन् दिने तिलतैलं लेपयन्ति। स्नानं कुर्वन्ति च। तिलतर्पणमपि कुर्वन्ति। दानादिसत्कर्माणि विशेषतः अस्माकं संस्कृतौ मुख्यतां सम्पादितवन्ति। अस्मिन् कालेऽपि नास्तीति वचनमनुक्त्वैव ददति समे जनाः। एवं मकरसङ्क्रान्तिः त्यागगुणम् अस्मासु वर्धयति।

### अनडुहुत्सवः - (कनुमपर्व)

सङ्क्रमणदिनस्य अनन्तरदिने क्रियतेऽयं महोत्सवः ''कनुम'' इति नाम्ना व्यवह्रियते। अस्मिन् दिने जनाः पशूनां पक्षिणाञ्च पूजाः कुर्वन्ति। वृषभोत्सवविषयः ''अनडुहुत्सवः'' इति नाम्ना अर्थववेदे वर्तते। अमुमुत्सवं

प्रधानतः कृषकाः एव आचरन्ति। सर्वं जगत् श्रीमद्वासुदेवमयमिति मन्यमानाः अस्य कनुमपर्वणः आचरणं कुर्वन्ति। कर्षकस्य सम्पत् अनुडुहादिकमेव। तस्याः सम्पदः भक्तिभावेन पूजनं कुर्वन्ति।



एवं त्रिदिवसमहोत्सवत्वेन मकरसङ्क्रमणम् उत्साहेन आनन्दातिशयेन, उल्लासेन, महता वैभवेन च आचर्यते। एतस्य मकरसङ्क्रमणस्य आचरणेन जनाः इहलोकसुखानि, ऐश्वर्यं, विजयं, कीर्तिं, च प्राप्नुवन्ति इति निश्चयः।

भारतीयानाम् अस्माकम् आचारव्यवहारेषु संस्कृतौ कश्चन गभीरः सन्देशः प्रतिपर्व वर्तते एव। तांस्तान् निगूढान् गभीरांश्च मुख्यविशेषसन्देशान् ज्ञात्वा अवबुध्य आचरणवेलायां तदनुसारं यदा यतेमहि तदा एव वयं सर्वे यथार्थोक्तफलानि आप्तुं शक्ष्यामः।

अमुं सन्देशं मनसि निधायैव सर्वाण्यस्माकं पर्वाणि तथा तेषां वैज्ञानिकदृष्ट्या, साङ्घिकदृष्ट्या च प्रयोजनानि संस्मरन्तः तानि पर्वाणि आचरामः। तत्तत्फलितानि च प्राप्नुमः।





संलग्ने चित्रे हरितपत्राणां मध्ये नीलं पुष्पं दृष्ट्वा सद्यः भगवतः श्रीकृष्णस्य स्मरणेन झटिति स्मृतिपथमागता एषा पद्यमाला प्रख्या राधाकृष्णशर्मभिः। एतादृशीं प्रतिभां छात्राः ये प्रदर्शयन्ति तानपि प्रोत्साहयति सप्तगिरिः संस्कृतमासपत्रिका इति सादरं विज्ञाप्यते।

बालकृष्ण सलीलं त्वं चोरायित्वा नवोद्धृतम्।
हरिगुल्मेषु गुप्तो वा यशोदानन्दवर्धन ।।१।।

व्रजे गोपालकृष्ण त्वं क्रीडने सखिभिः सह।
मग्नो वा हरिशाखासु गोकुलानन्दवर्धन ।।२।।

वंशीकृष्ण वनान्ते वा रासगोष्ठ्यां क्रियारतः।
पीतनीलाम्बराभिस्त्वं गोपिकानन्दवर्धन ।।३।।

ताण्डवकृष्ण कालिङ्गमर्दनानन्तरं भृशम्।
हरिद्विषावृतो वा त्वं यामुनानन्दवर्धन ।।४।।

लक्षितो वा हरे कृष्णाहं ब्रह्मास्मीति योगिभिः।
स्वमानसे हरिक्षेत्रे परमानन्दवर्धन ।।५।।

कृष्णः कुत्रेति पृच्छन्ति तस्य लीलाः क्व दर्शिताः।
विमोहिता अहोरात्रं नानुपश्यन्ति भक्तितः ।।६।।

कृष्णव्याप्तमिदं विश्वं कृष्णे नन्वखिलं भवेत्।
अन्तर्बहिश्च सर्वत्र नास्ति कृष्णं विना क्वचित् ।।७।।

सुगन्धिकुन्तलाम्बायाः प्रपौत्रेण तु विश्वतः।
लीलाया ते हि मन्यन्ते कृष्ण लीलास्तवाद्भुताः ।।८।।



# कूरत्तालवान् चरित्रम्

- श्री रङ्गमाधवन्
चरवाणी ९६८८७२६६३६

कूरत्तालवान् रामनुजस्य प्रथमः एवम् अन्तरङ्गशिष्यः च। श्रीवत्साङ्कमिश्रः इति नाम्ना विख्यातः सः काञ्चीपुरस्य समीपे 'कूरं' इति ग्रामे धनपालः असीत्। ग्रामपालकः एवं उत्कृष्टज्ञानवान् च आसीत्। तेन स्वस्य प्रभूतधनधान्यादिकं सर्वं भागवतः आराधनाय व्ययीकृतम्। वरदराजस्य सेवार्थं ये ये आगच्छन्ति तेषां भोजनदानाय अहोरात्रं तस्य चिन्तनम् आसीत्। तस्य दानादिकार्यादीन् अवलोक्य जनाः तं कूरेशः कूराधिपः इति ऊचुः। तस्य धर्मपत्नी गोधा इति नाम्ना तस्य सहधर्मचारिणी अत्यन्तम् अनुकूला पतिव्रता समचित्ता च आसीत्। काञ्चीपुरे रामानुजः देवाधिराजस्य तीर्थकैङ्कर्यं कुर्वन् वेदान्तसन्मार्गम् प्रसारयन् आसीत्। तस्य महिमा अवनितले सर्वास्वपि दिक्षु विवृता आसीत्। कूरेशः अपि तस्य दिवाकरसमानाम् कीर्तिम् अवलोक्य आत्मात्मीयान् न्यवेदयत्। ततः कूरेशः आचार्यस्य सेवायै तस्य कालं यापयामास। किञ्चित् कालानन्तरं परमतैः कलुषितां श्रीरङ्गश्रियं परिष्कर्तुं रामानुजः श्रीरङ्गनगरीं गतः। एकदा कूरेशस्य दानकर्माणि दृष्ट्वा देवाधिराजस्य धर्मपत्नी जगन्माता महादेवी काञ्चीपूर्णस्य निकटे 'कूरेशस्य कर्मणा प्रसन्ना अहं तं द्रष्टुम् इच्छामि' इति उक्तवती। काञ्चीपूर्ण अपि परेद्युः कूरेशं दृष्ट्वा महादेवी त्वां श्लाघितवती, एवं त्वां द्रष्टुम् इच्छति इति उक्तवान्। काञ्चीपूर्णस्य वाक्यं श्रुत्वा कूरेशस्य मनसि भीतिः सञ्जाता, महालक्ष्मीः स्वयं मां श्लाघितवती इति मम मनसि अहङ्कारः जनिष्यति वेति। तेन मदोन्मत्तः भविष्यामि वा इति। अतः सः झटिति स्वस्य प्रभूतं धनम्, असङ्ख्यम् ऐश्वर्यं निखिलं तृणं मन्वानः तानि सर्वाणि तथैव त्यक्त्वा आचार्यकैङ्कर्यार्थम् श्रीरङ्गक्षेत्रं प्रति प्रस्थितः। तत्र मार्गे अरण्ये तस्य धर्मपत्नी भीता आसीत्। तथाविधां तां दृष्ट्वा कूरेशः अपृच्छत्, किमर्थम् एवं भवति इति। आवां सर्वस्वं त्यक्त्वा खलु गच्छावः तर्हि किमर्थम् भीता भवति। यदि हस्ते किमपि अस्ति तर्हि मार्गे भयं भवति इति। तस्य धर्मपत्नी 'गोधा' उक्तवती, बाल्यात् प्रभृति स्वर्णपात्रे एव खादति भवान्। अतः भवताम् आहाराय एकं लघु सुवर्णपात्रं आनीतवती अस्मि इति। तस्याः वाक्यस्य श्रवणमात्रेण तस्याः सुवर्णपात्रं मार्गे एव क्षिप्त्वा अग्रे गतः। अनेन ज्ञायते तस्य वैराग्यबुद्धिः। एवं सः श्ररङ्गे उञ्छवृत्तिं कृत्वा अनुदिनम् आचार्यसेवाम् एवं श्रीरङ्गनाथस्य च सेवां कृत्वा सुखेन अवसत्। एकदा तस्य भिक्षा न लब्धा। तस्या धर्मपत्नी पत्युः कष्टं सोढुम् असमर्था भगवन्तं श्रीरङ्गराजं प्रार्थितवती। झटिति अर्चकद्वारा रङ्गराजः स्वस्य निर्माल्यम्

अनुगृह्णाति च। तादृशसुगुणपरिपूर्णः आसीत्। एवं कूरेशः स्वस्य आचार्यस्य सर्वविधामपि सेवां चकार। एकदा भगवद्रामानुजाचार्यस्य आज्ञां पूरयितुं ब्रह्मसूत्रस्य पूर्वाचार्यस्य मार्गेण विशिष्टाद्वैतरीत्या भाष्यं कर्तुं उद्युक्तः। तदर्थं महर्षि बोधायनेन कृतं वृत्तिग्रन्थं प्राप्तुं काश्मीरं प्रति प्रस्थितः। कूरेशस्य अपारज्ञानविशेषं समालोक्य तं काश्मीरं प्रति आनीतवान्। तत्र गत्वा तत्रत्यान् पण्डितान् वादे विजित्य वृत्तिग्रन्थं प्राप्तवान्, परन्तु अनेतुं न शक्यते इति चिन्ताकुलः असीत्। तदा कूरेशः एकसन्तग्राही आसीत्। सः तत्रैव एकवारं समग्रं वृत्तिग्रन्थं पठित्वा मनसि धारयन् यथाग्रन्थं पुनरुक्तवान्। एतादृशं शिष्यं दृष्ट्वा मुदान्वितः भगवद्रामानुजः। अतः विशिष्टाद्वैतरीत्या भगवद्रामानुजविरचितस्य श्रीभाष्यस्य उदयाय कूरेशस्यैव उपकारः प्रधानः भवति। श्रीभाष्यस्यैव महिमा वर्तते यत् वृत्त्यनुसारेण कृतं भाष्यम् इति। श्रीभाष्यकारः भगवद्रामानुजः स्वयं श्रीभाष्यस्य उपोद्घाते उवाच ''भगवद्बोधायनकृतां इमां विस्तीर्णां ब्रह्मसूत्रवृत्तिं पूर्वाचार्याः सञ्चिक्षिपुः तन्मतानुसारेण सूत्राक्षराणि व्याख्यास्यन्ते'' इति। अनेन ज्ञायते विशिष्टाद्वैतसिद्धान्ते कूरेशस्य उपकारः महान् बोभूयते इति। एवं भगवद्रामानुजेन कृतं श्रीभाष्यं लोके प्रसृतं भवति तथाविधं भाष्यं जगति पाषण्ड, मुण्ड, अद्वैतादिसकलमतजल्पनान् दूरीकृत्य, सुयुक्त्या, सुतर्केण च यथाश्रुतार्थान् प्रतिष्ठापयामास। अनेन असूयाग्रस्ताः इतरमतस्थाः चोळराजानं प्रति अन्यथा उक्तवन्तः। तेषां



दुर्बोधनेन कलुषितमनाः चोळराजः भगवद्रामनुजं हन्तुं वीरान् प्रेरयमास। तदा गुरोः रक्षणाय कूरेशः स्वयं काषायत्रिदण्डं धृत्वा चोळाधिपस्य पुरतः अहमेव रामानुजः इत्युक्त्वा स्थितः। तदा मदोन्मत्तः चोळाधिपः तस्य नेत्रद्वयमपि चिच्छेद। गुरोः रक्षणाय विनष्टनेत्रः कूरेशः द्वादशवर्षाणि यावत् 'तिरुमालिरुञ्चोलै' इति विख्यते सुन्दरबाहू क्षेत्रे एकान्ते वासम् अकरोत्। कोलहलस्य समाप्त्यनन्तरं रामानुजः स्वशिष्यस्य त्यागं ज्ञात्वा भग्नमनाः सञ्जातः। एवं सः कूरेशं प्रति आदिदेश, पुनः नेत्रप्राप्त्यर्थं भगवन्तं प्रार्थयन्तु इति। तथा गुरोराज्ञया स्वस्य कुलनिधिम् आश्रितवत्सलम् अपारकरुणासिन्धुं भक्ताभीष्टकल्पद्रुमं देवाधिराजं प्रार्थयामास। उत्तरक्षणे एव नेत्रे प्रदत्तवान् वरदराजः। तेन सर्वे श्रीवैष्णवाः मुदान्विताः। एवं तस्य महिमा भुवनत्रये च सदा विहरति।

**कूरेशस्य कृतयः -**

- वरदराजस्तवः
- सुन्दरबाहुस्तवः
- अतिमानुषस्तवः
- वैकुण्ठस्तवः
- श्रीस्तवः
- धाटीपञ्चकम्
- प्रार्थनापञ्चकम्

एवं तस्य द्वौ पुत्रौ अजायेताम्। तौ पुत्रौ आचार्यस्य निकटे अर्पयित्वा स्वस्य त्रयोविंशदधिक-एकशततमे अब्दे नित्यविभूतिम् अलङ्कृतवन्तः।



## जनवरि - २०२२

| भानुवासरः | इन्दुवासरः | भौमवासरः | सौम्यवासरः | बृहस्पतिवासरः | भृगुवासरः | मन्दवासरः |
|---|---|---|---|---|---|---|
| | | | | | | 1 |
| 2 | 3 | 4 | 5 | 6 | 7 | 8 |
| 9 | 10 | 11 | 12 | 13 | 14 | 15 |
| 16 | 17 | 18 | 19 | 20 | 21 | 22 |
| 23 | 24 | 25 | 26 | 27 | 28 | 29 |
| 30 | 31 | | | | | |

## फिब्रवरि - २०२२

| भानुवासरः | इन्दुवासरः | भौमवासरः | सौम्यवासरः | बृहस्पतिवासरः | भृगुवासरः | मन्दवासरः |
|---|---|---|---|---|---|---|
| | | 1 | 2 | 3 | 4 | 5 |
| 6 | 7 | 8 | 9 | 10 | 11 | 12 |
| 13 | 14 | 15 | 16 | 17 | 18 | 19 |
| 20 | 21 | 22 | 23 | 24 | 25 | 26 |
| 27 | 28 | | | | | |

## मार्च् - २०२२

| भानुवासरः | इन्दुवासरः | भौमवासरः | सौम्यवासरः | बृहस्पतिवासरः | भृगुवासरः | मन्दवासरः |
|---|---|---|---|---|---|---|
| | | 1 | 2 | 3 | 4 | 5 |
| 6 | 7 | 8 | 9 | 10 | 11 | 12 |
| 13 | 14 | 15 | 16 | 17 | 18 | 19 |
| 20 | 21 | 22 | 23 | 24 | 25 | 26 |
| 27 | 28 | 29 | 30 | 31 | | |



### जनवरि - २०२२

१. अङ्कुलसंवत्सरारम्भः
०७-१३. आण्डाल् नीराट्टोत्सवः
१३. वैकुण्ठैकादशी
१४. भोगी, भोगी तेरु
१५. मकरसङ्क्रान्तिः
१६. कनुम,
श्रीगोदादेवीपरिणयोत्सवः
१७. रामकृष्णतीर्थमुक्कोटि
१८. तिरुमल श्रीस्वामिनः
प्रणयकलहमहोत्सवः
२६. गणतन्त्रदिनोत्सवः

### फिब्रवरि - २०२२

०१. श्रीपुरन्दरदासस्य आराधनामहोत्सवः
०२-१०. देवुनिकडपा श्रीलक्ष्मीवेङ्कटेश्वरस्वामिनः
ब्रह्मोत्सवः
०५. वसन्तपञ्चमी
०८. रथसप्तमी, भीष्माष्टमी
१२. भीष्मैकादशी
१६. कुमारधारतीर्थमुक्कोटि
२०-२८. श्रीनिवासमङ्गापुरम्
श्रीकल्याणवेङ्कटेश्वरस्वामिनः ब्रह्मोत्सवः
२२ तः ०३ मार्च् पर्यन्तम् तिरुपति -
कपिलेश्वरस्वामिनः ब्रह्मोत्सवः

### मार्च् - २०२२

०१. महाशिवरात्रिः
१०-१८. तरिगोण्ड श्रीलक्ष्मीनरसिंहस्वामिनः
ब्रह्मोत्सवः
१३-१७. तिरुमलक्षेत्रे प्लवोत्सवः
१८. श्री लक्ष्मीजयन्ती, तुम्बुरुतीर्थमुक्कोटि
२९. अन्नमाचार्यवर्धन्तिः
३० तः एप्रेल् ०७ पर्यन्तम् तिरुपति,
श्रीकोदण्डरामस्वामिनः ब्रह्मोत्सवः



## एप्रेल् - २०२२

| भानुवासरः | इन्दुवासरः | भौमवासरः | सौम्यवासरः | बृहस्पतिवासरः | भृगुवासरः | मन्दवासरः |
|---|---|---|---|---|---|---|
| | | | | | 1 | 2 |
| 3 | 4 | 5 | 6 | 7 | 8 | 9 |
| 10 | 11 | 12 | 13 | 14 | 15 | 16 |
| 17 | 18 | 19 | 20 | 21 | 22 | 23 |
| 24 | 25 | 26 | 27 | 28 | 29 | 30 |

## मे - २०२२

| भानुवासरः | इन्दुवासरः | भौमवासरः | सौम्यवासरः | बृहस्पतिवासरः | भृगुवासरः | मन्दवासरः |
|---|---|---|---|---|---|---|
| 1 | 2 | 3 | 4 | 5 | 6 | 7 |
| 8 | 9 | 10 | 11 | 12 | 13 | 14 |
| 15 | 16 | 17 | 18 | 19 | 20 | 21 |
| 22 | 23 | 24 | 25 | 26 | 27 | 28 |
| 29 | 30 | 31 | | | | |

## जून् - २०२२

| भानुवासरः | इन्दुवासरः | भौमवासरः | सौम्यवासरः | बृहस्पतिवासरः | भृगुवासरः | मन्दवासरः |
|---|---|---|---|---|---|---|
| | | | 1 | 2 | 3 | 4 |
| 5 | 6 | 7 | 8 | 9 | 10 | 11 |
| 12 | 13 | 14 | 15 | 16 | 17 | 18 |
| 19 | 20 | 21 | 22 | 23 | 24 | 25 |
| 26 | 27 | 28 | 29 | 30 | | |

### एप्रेल् - २०२२

०२. श्रीशुभकृत् संवत्सरारम्भः (युगादिः)
०३. मत्स्यजयन्ती
०६-१४. वायलपाडु श्रीपट्टाभिरामस्वामिनः ब्रह्मोत्सवः
१०-१८. ओण्टिमिट्ट श्री कोदण्डरामस्वामिनः ब्रह्मोत्सवः
१०. श्रीरामनवमी
१४. तमिळनूतनसरावत्सरम्भः
१४-१६. तिरुमल, श्रीस्वामिनः वसन्तोत्सवः
१६- २४. नागलापुरम् श्रीवेदनारायणस्वामिनः ब्रह्मोत्सवः

### मे - २०२२

०३. अक्षयतृतीया, श्रीपरशुरामजयन्ती
०५. श्रीरामानुजजयन्ती
०६. श्रीशङ्करजयन्ती
१०-१२. तिरुमल श्रीपद्मावतीश्रीनिवासपरिणयमहोत्सवः
१०-१७. तिरुपति गङ्गाजातर
१३-२१. हृषीकेष्/नारायणवनम् श्रीकल्यणावेङ्कटेश्वरस्वामिनः ब्रह्मोत्सवः
१४-१७. तिरुचानूरु श्रीपद्मावतीदेव्याः वसन्तोत्सवः
१४. श्रीनरसिंहजयन्ती
१५. श्रीकूर्मजयन्ती, तरिगोण्ड वेङ्कमाम्बाजयन्ती
१६. श्रीअन्नमाचार्यजयन्ती
२३-३१. कार्वेटिनगरम् श्रीवेणुगोपालस्वामिनः ब्रह्मोत्सवः
२५. श्रीहनुमज्जयन्ती

### जून् - २०२२

०५-१३. तिरुपति श्रीगोविन्दराजस्वामिनः ब्रह्मोत्सवः
१०-१८. अप्पलायगुण्ट श्रीप्रसन्नवेङ्कटेश्वरस्वामिनः ब्रह्मोत्सवः
१०-१४. तिरुचानूरु श्रीपद्मावतीदेव्याः प्लवोत्सवः
१२-१४. तिरुमल श्रीस्वामिनः ज्येष्ठाभिषेकः
२०-२२. तिरुचानूरु श्रीसुन्दरराजस्वामिनः अवतारोत्सवः

## जूलै - २०२२

| भानुवासरः | इन्दुवासरः | भौमवासरः | सौम्यवासरः | बृहस्पतिवासरः | भृगुवासरः | मन्दवासरः |
|---|---|---|---|---|---|---|
| 31 | | | | | 1 | 2 |
| 3 | 4 | 5 | 6 | 7 | 8 | 9 |
| 10 | 11 | 12 | 13 | 14 | 15 | 16 |
| 17 | 18 | 19 | 20 | 21 | 22 | 23 |
| 24 | 25 | 26 | 27 | 28 | 29 | 30 |

## आगस्ट् - २०२२

| भानुवासरः | इन्दुवासरः | भौमवासरः | सौम्यवासरः | बृहस्पतिवासरः | भृगुवासरः | मन्दवासरः |
|---|---|---|---|---|---|---|
| | 1 | 2 | 3 | 4 | 5 | 6 |
| 7 | 8 | 9 | 10 | 11 | 12 | 13 |
| 14 | 15 | 16 | 17 | 18 | 19 | 20 |
| 21 | 22 | 23 | 24 | 25 | 26 | 27 |
| 28 | 29 | 30 | 31 | | | |

## सेप्टेम्बर् - २०२२

| भानुवासरः | इन्दुवासरः | भौमवासरः | सौम्यवासरः | बृहस्पतिवासरः | भृगुवासरः | मन्दवासरः |
|---|---|---|---|---|---|---|
| | | | | 1 | 2 | 3 |
| 4 | 5 | 6 | 7 | 8 | 9 | 10 |
| 11 | 12 | 13 | 14 | 15 | 16 | 17 |
| 18 | 19 | 20 | 21 | 22 | 23 | 24 |
| 25 | 26 | 27 | 28 | 29 | 30 | |



### जूलै - २०२२

०३-०५. श्रीनिवासमङ्गापुरम्
श्री कल्याणवेङ्कटेश्वरस्वामिनः
साक्षात्कारवैभवम्

०९-११. तिरुपति श्रीगोविन्दराजस्वामिनः
ज्येष्ठाभिषेकः

१३. गुरुपूर्णिमा, व्यासजयन्ती

१७. तिरुमलक्षेत्रे स्वामिनः आणिवर आस्थानम्

२९. श्रीचक्रत्ताळ्वार् वर्षतिरुनक्षत्रम्

### आगस्ट् - २०२२

०१. नागचतुर्थी

०२. गरुडपञ्चमी

०५. वरलक्ष्मीव्रतम्

०६. मातृश्री तरिगोण्ड वेङ्गमाम्बावर्धन्तिः

०७ - १०. तिरुमल श्रीस्वामिनः पवित्रोत्सवः

११. श्रीविखनसमहामुनिजयन्ती

१२. श्रीहयग्रीवजयन्ती

१३. गायित्रीजपः

१५. स्वातन्त्र्यदिवसः

१९. श्रीकृष्णजन्माष्टमी, गोकुलाष्टमी

२९. श्रीबलरामजयन्ती

३०. श्रीवराहजयन्ती

३१. विनायकचतुर्थी

### सेप्टेम्बर् - २०२२

०१. ऋषिपञ्चमी

०७. श्रीवामनजयन्ती

०७-१०. तिरुचानूरु
श्रीपद्मावतीदेव्याः पवित्रोत्सवः

०९. अनन्तपद्मनाभव्रतम्

२६ तः अक्टोबर् ०५ पर्यन्तं
तिरुचानूरु श्रीपद्मावतीदेव्याः नवरात्र्युत्सवः

२७ तः अक्टोबर् ०५ पर्यन्तं,
तिरुमल श्रीवेङ्कटेश्वरस्वामिनः ब्रह्मोत्सवः



## अक्टोबर् - २०२२

| भानुवासरः | इन्दुवासरः | भौमवासरः | सौम्यवासरः | बृहस्पतिवासरः | भृगुवासरः | मन्दवासरः |
|---|---|---|---|---|---|---|
| | | | | | | 1 |
| 2 | 3 | 4 | 5 | 6 | 7 | 8 |
| 9 | 10 | 11 | 12 | 13 | 14 | 15 |
| 16 | 17 | 18 | 19 | 20 | 21 | 22 |
| 23 | 24 | 25 | 26 | 27 | 28 | 29 |
| 30 | 31 | | | | | |

## नवम्बर् - २०२२

| भानुवासरः | इन्दुवासरः | भौमवासरः | सौम्यवासरः | बृहस्पतिवासरः | भृगुवासरः | मन्दवासरः |
|---|---|---|---|---|---|---|
| | | 1 | 2 | 3 | 4 | 5 |
| 6 | 7 | 8 | 9 | 10 | 11 | 12 |
| 13 | 14 | 15 | 16 | 17 | 18 | 19 |
| 20 | 21 | 22 | 23 | 24 | 25 | 26 |
| 27 | 28 | 29 | 30 | | | |

## डिसेम्बर् - २०२२

| भानुवासरः | इन्दुवासर | भौमवासरः | सौम्यवासर | बृहस्पतिवासर | भृगुवासरः | मन्दवासरः |
|---|---|---|---|---|---|---|
| | | | | 1 | 2 | 3 |
| 4 | 5 | 6 | 7 | 8 | 9 | 10 |
| 11 | 12 | 13 | 14 | 15 | 16 | 17 |
| 18 | 19 | 20 | 21 | 22 | 23 | 24 |
| 25 | 26 | 27 | 28 | 29 | 30 | 31 |

### अक्टोबर् - २०२२

०१. तिरुमल श्रीस्वामिनः गरुडसेवा
०२. सरस्वातीपूजा
०३. दुर्गाष्टमी
०४. महानवमी
०५. विजयदशमी
२४. नरकचतुर्दशी,
दीपावली अमावास्या
२५. श्रीकेदारगौरीव्रतम्
२९. नागचतुर्थी

### नवम्बर् - २०२२

०१. तिरुमलक्षेत्रे स्वामिनः पुष्पयागः
०५. कैशिकद्वादशी
१४. बालाकदिनोत्सवः
२०-२८ तिरुचानूरु श्रीपद्मावतीदेव्याः ब्रह्मोत्सवः
२१. धन्वन्तरिजयन्ती
२४. तिरुचानूरु श्रीपद्मावतीदेव्याः गजवाहनोत्सवः
२८. तिरुचानूरु श्रीपद्मावतीदेव्याः पञ्चमीतीर्थम्
२९. तिरुचानूरु श्रीपद्मावतीदेव्याः पुष्पयागः,
सुब्रह्मण्यषष्ठी

### डिसेम्बर् - २०२२

०४. गीताजयन्ती
०५. श्रीचक्रतीर्थमुक्कोटि
०६. तिरुपति श्रीकपिलेश्वरस्वामिनः
कृत्तिकादीपोत्सवः
०७. श्रीदत्तजयन्ती, तिरुमल श्रीस्वामिनः
आलये कृत्तिकादीपोत्सवः
१७. धनुर्मासारम्भः
२१. हनुमद्व्रतम्

भागः - ९

# भगवद्गीता

तेलुगुमूलम् - श्री कुप्पा विश्वनाथशास्त्री
संस्कृतानुवादः - बि.गिरीशकुमारः (शोधच्छात्रः)
चरवाणी - ९९८९६५७५७६



(गतसञ्चिकायाः परभागः)

न केवलं गुरूणां पुरतः, किन्तु सर्वेषामपि पुरतः अस्माकं मनसि कीदृशभावनाः सन्तीति सुस्पष्टं यथा अवगच्छन्ति तथा भाषणं कर्तव्यम्। दुर्योधनस्तु स्वमनसि विद्यमानान् असूयादिधर्मान् साधारणवाक्यैः आच्छाद्य भाषते। एवं द्वन्द्वार्थयुक्तवचनानि तु नितान्तम् असह्यानि। तथा न कार्यम्। गुरूणाम् अन्येषां वा पुरस्तात् एकार्थयुक्तेन वचनेनैव व्यवहारः करणीयः न तु द्वन्द्वार्थयुक्तेन वचनेन। कदापि द्वन्दार्थयुतं वचः भवति चेदपि अन्यं तत् सन्तोषयेत् न तु दुःखं जनयेत्। दुर्योधनसदृशाः दुर्मार्गगामिनः दुःखजनकवाक्यानि द्वन्द्वार्थकान्येव प्रयुञ्जते इति विषयं बोधयति श्रीमद्भगवद्गीतामाता।

वयं तु श्रीकृष्णपरमात्मना प्रोक्तां श्रीमद्भगवद्गीतां 'वेदः' इति मन्यामहे। वेदाः उत श्रीमद्भगवद्गीता च, एतदुभावपि नराणां कर्तव्यबोधकौ इति चिन्तयामः।

किन्तु कस्यापि ग्रन्थस्य अध्ययनात्पूर्वं उत उपदेशस्य श्रवणात्पूर्वमपि श्रोतुं वा अध्येतुं वा कोऽर्हः इति निश्चेतव्यः। एवं कोऽधिकारी भवतीति शास्त्रीयपरिभाषायाम् "अधिकारी" इत्यनेन शास्त्रेषु विस्तरेण चिन्तयन्ति।

तथा च श्रीमद्भगवद्गीतायाः पठने को आधिकारी भवतीति विचारार्थं इतिहासं पश्यामः।

इतिहासे तु प्रप्रथमतया एनां श्रीमद्भगवद्गीतां अर्जुनः श्रुतवान्। यतो हि तमुद्दिश्य एव श्रीकृष्णः उपदिदेश।

न केवलं अर्जुनः, अपि तु महारथे ध्वजस्थः आञ्जनेयः प्रत्यक्षतया श्रुतवान्। एवं भगवतः सर्वाण्यपि लीलाकृत्यानि योगनेत्राभ्यां ईक्षमाणः वेदव्यासोऽपि सुस्पष्टं आव (केतयाञ्चकार)। भगवतः वेदव्यासस्य परमानुग्रहात् भगवद्विषयकोपदेशार्हतां प्राप्तः सञ्जयः, तेन च धृतराष्ट्रोऽपि अश्रृणोत्।

न केवलं एते जनाः, अपि तु नैके सिद्धाः, योगिनः, महर्षयश्च कदा परमात्मा उपदिशतीति सूक्ष्मरूपेण संस्थिताः सन्तः शुश्रुवुः। तथा च उपदेशकाले एव बहुभिः श्रुतत्वात् सेयं अर्जुनमात्रोद्दिष्टा न।

ननु ये उपदेशं श्रुतवन्तः ते एव उद्दिष्टाः भवन्ति खलु इति चेन्न। श्रोतृणां चयने श्रीकृष्णः अतीव जागरूकतां प्रदर्शितवानिति ज्ञायते। तेषु प्रथमः अर्जुनः परमात्मनः अत्यन्तप्रियः। परमात्मनः यथा सन्तोषः भवेत् तथा सर्वप्रकारेण प्रीतिं सम्पादितवान्। कृष्णस्य भक्तः, सखा, स्नेहितः, बन्धुरपीति कारणात् सः योग्यः।

द्वितीयः ध्वजारूढः आञ्जनेयः। स च परमात्मनः भक्तश्रेष्ठः। तेन ये च परमात्मनः भक्ताः ते योग्या इति निरुपयामास। एवं अन्यः वेदव्यासः महर्षिः, स च महान् तत्वविच्च। एतेन ये तत्वज्ञानाकाङ्क्षिणः तेऽपि योग्याः इति प्रदर्शितम्।

तत्वज्ञानं, भक्तिः, योग्यता इत्येताभिः शून्याः, श्रवणे अनासक्ताः ये सन्ति तेऽपि श्रवणार्हाः इति विषयं सूचयितुं सञ्जयं तथा धृतराष्ट्रं दर्शितवान्।

अनयोः मध्ये सञ्जयः सामान्यसाधकः। इन्द्रियनिग्रहार्थं यतमानः सन् तत्वज्ञानार्थी। तस्मै साक्षादनुपदिष्टामपि योगशक्त्या श्रावितवानित्येतेन सामान्याः अपि साधकाः अत्र योग्याः भवन्ति।

अन्तिमः धृतराष्ट्रः। तस्मिन् सामान्यसद्गुणाः अपि न दरीदृश्यन्ते। न केवलं रूपग्राहिचक्षुः अपि तु मनोचक्षुरपि निमीलितं धृतराष्ट्रमपि उद्दिश्य उपदेशात् ज्ञायते यत् अधिकारहीनेन मानवमात्रेणापि गीता पठनीया एव इति। अत्र सञ्जयः वस्तुतः सेवकः। तम्प्रति अपि उपदिष्टत्वात् "ग्रासूरूट् मेनेज्मेण्ट्" अधस्तरीयानामपि गीता अत्यन्तम् उपयोगिका इति सूचितवान् श्रीकृष्णः।

(अनुवर्तते)



इमं स्तवमधीयानः श्रद्धाभक्तिसमन्वितः।


(गतसञ्चिकायाः परभागः)

# हरिदासवाङ्मये
# श्रीवेङ्कटाचलाधीशः
(विजयदासकृतिषु)

तेलुगुमूलम् - सुस्वरं नागराजाचार्युलु
संस्कृतानुवादः - डा.गङ्गिशेट्टि लक्ष्मीनारायणः
चरवाणी - ९४९४२४८३४८

शिलेये सालग्राम। होललेसुदरुशन।
थलथल सुवर्णामलले चक्रांकित।
इलेयोलगिदे निश्चल वैकुंठनगर
सलेश्वेतद्वीप इदे पोलेवानंतासन
स्थल वेंदु उत्तमरु तिलिदु मन्नि सुवरु
मलिने नव्वानम्म विजयविठ्ठलन्न
ओलिसि भजिसुवरु जलगर्भादिगळु।।

विजयदासवर्याः वेङ्कटाद्रेः वैशिष्ट्यं वदन्तः वेङ्कटाद्रौ विद्यमानाः शिलाः सुदर्शनस्वरूपाः सालग्रामाः एवमेव वेङ्कटाद्रौ विद्योतमानाः सैकतवेदिकाः चक्राङ्किताः भवन्ति। अस्यां भूमौ निश्चलः वैकुण्ठः वेङ्कटाद्रिरेव। अपि च श्वेतदीपः अनन्तासनं एतदेव इति उत्तमाः ज्ञातवन्तः। अत्र विद्यमानं विजयविठलं श्रीवेङ्कटेश्वरं ब्रह्मरुद्रादयः असीमया भक्त्या पूजयन्ति।

वरगिरि यात्रे मनमुट्टि माडलु।
वरवीन परनाम विजयविट्ठल तिम्मा।।

एतां वटगिरियात्रां भक्तयात्रां भक्त्या ये कुर्वन्ति तेषां वाञ्छानां पूरणं करोति विजयविठलः।

मूज्ञग दोलगिदे सर्वयात्रिगेनिगिलु
सज्जन नादव ई गिरियल्लि वंदु
हेज्जय निडलु अवनकुलकोटि उद्धार
आर्जव मार्गदलि संचरिसुवरु
मज्जनादि कर्म अल्पमाडिदरु नि -

र्व्याजवाद पुण्यमेरु तुल्यवागुवुदु।
दुर्जनर उपहति लेशमातुरविल्ल
निर्जररु मेच्चुवरु अवलोकन माडुता
अर्जुन सारथि विजयविट्ठल वेंकट
वेज्ञरिके विडिसुवभिन्न पवकै कोंडु।।

त्रिषु लोकेषु विद्यमानेषु क्षेत्रेषु वेङ्कटाद्रिक्षेत्रम् महत्त्वपूर्णं क्षेत्रं वर्तते।

यः वेङ्कटाद्रौ एकं पदं स्थापयति, तस्य वंशीयाः सर्वेऽपि धन्याः भविष्यन्ति। ते सर्वे देवमार्गे प्रयाणं कुर्वन्ति। वेङ्कटाद्रिक्षेत्रे कृतं अल्पं कर्म अपि अनुपमं पुण्यं ददाति। वेङ्कटाद्रिः मेरुसदृशः भवति। तत्र दुर्जनेभ्य क्लेशाः न भवन्ति। देवाः वेङ्कटाद्रिं प्रशंसन्ति।

कृतयुगदलि इदे वैकुण्ठवेनिसोदु।
त्रेतायुगदलि अनंतासन।।
अतिशयद्वापरदलि श्वेतदीप।
चतुरयुगदलि वरगिरिये सिद्ध।।
मतिवंतरु इनितु तिलिदु पूजिपरु।
भारत खंडदोलु एकभकुति यल्लि।।
क्रतुजपतप तीर्थ यात्रे दान नाना।
व्रतगलु तत्त्वविचारदलि शतकल्पमाडि।।
श्रीकृष्ण गर्पिसिदवगे हितवागदोम्मे शेषद्रियात्रि।
दुर्मतिगलिगादरु निष्पलवो।।
चतुरमोगनु इदर मडिमे येणिसि।
गति तप्पिदंते निल्लुवनु।
क्षितिय मान्नवारिगे साध्यवे एणिसलु
नुतिसि मातुर पुण्य पडुकोंबोदु।।
पतित पावननम्म विजयविठल इल्लि।
सतत नेलिसि इप्प तिरुवेंगलनेविसि।।

कृतयुगे वेङ्कटाद्रिरेव वैकुण्ठः त्रेतायुगे एतदेव अनन्तासनम्, द्वापरयुगे एतदेव श्वेतदीपः, अस्मिन् कलियुगे वटगिरिरेवं वेङ्कटाचलोऽभवत्। बुद्धिमन्तः अमुं विषयं ज्ञात्वा वेङ्कटाचलस्य पूजां कुर्वन्ति। अस्मिन् भरतखण्डे एकग्रचित्तेन भक्त्या च यज्ञ-जप-तप तीर्थयात्रा-दानादिनैकव्रतानां तत्त्वविचारं कृत्वा शताधिकं भगवते श्रीकृष्णाय समर्प्यते चेद् यद् पुण्यम् आगच्छति तत् वेङ्कटाचलयात्रां करोति चेत् आगच्छति। दुर्जनेभ्यः एतत् प्राप्तुं न शक्यते। चतुर्मुखः ब्रह्मदेवः वेङ्कटाद्रेः वैशिष्ट्यं ज्ञात्वा निश्चेष्टितो भूत्वा दण्डायमानः भवति चेत् मानवैः वेङ्कटाद्रिविषये तिरुवेङ्गलनाथः अस्मान् रक्षति।

**धरेगिदु वैकुंठपुरविदु निजवेंदु गरुडरु**
**सुररु किन्नररु सिदि्धरु सा।**
**ध्यरु गंधर्वुरु उरग, यक्षिरु किं**
**पुरुषरु चारणरु वरमुनिगलु भू-**
**सुरस मांदलाद परि परि ज्ञानिगळु**
**चरिसुवरु निस्तर वैराग्यदलि।**
**परमपुरुषतिम्म विजयविठ्ठलन्न**
**स्मरिसि गिरियल्लि परगति बयसुत्ता।।**

अस्मिन् भूलोके वेङ्कटादिरेव वैकुण्ठः इति निर्धार्य सुर-सिद्ध-गरुड-साध्य-गन्धर्व-उरग-यक्ष-किंपुरुष- चारण-वरमुनि-भूसुरादयः विविधज्ञानिनश्च अत्यधिकवैराग्यभावनया भक्त्या च कैवल्यं वाञ्छन्तः तिरुमलेशं स्मरन्तः भ्रमन्ति।

**फलमरगिड बल्लि खगमृगनाना।**
**कुलदजीविगलेल्ल चरिसुवरमरादि।**
**कुलदव रेल्ल जनिसि ओंदुरुपिलि।**
**बलु भकुति यल्लि साधन माडुत्त**
**सुलभवागिप्परु आवागसुजनक्के**
**पोलेदु कंगलिगे गोचरवागुत्त।**
**मलरिगे एंदिगू काणिसरु इदर**
**नेलिय बल्लरु दासरु**
**बलवंत वेङ्कट विजयविठ्ठलराय**
**सलहुव ई गिरियसारिद जनरिगे।।**

अस्मिन् वेङ्कटाचले देवाः वृक्ष-लता-पक्षि-मृगादि रूपेषु जनिं लब्ध्वा भक्त्या भगवन्तं श्रीनिवासं संसेव्य भक्तेभ्यः गोचराः भवन्ति। भगवद्भक्तिरहितेभ्यः एते तावत् आगोचराः भवन्ति। ये वेङ्कटाचलं भजन्ति, तान् सर्वान् भगवान् वेङ्कटेश्वरः सदा रक्षति।

**अप्रतियात्रेयिदु कंडवरि गागदु।**
**स्वप्रकाश विजयविठ्ठल वेङ्कट बल्ल।।**

(तिरुमलयत्रा अनुपमा यत्रा। इयं यात्रा सर्वेभ्यः साध्या न भवति। अस्य वेङ्कटाचलस्य माहात्म्यं भगवान् श्रीनिवासः एव जानाति।।

**अनंत जन्मद पुण्य फलिसिदरे।**
**अनंतगिरि यात्रे नीव विजयविठल।।**

अनन्तजन्मसु कृतं पुण्यं फलति चेदेव अनन्तगिरियात्रा सफला भवति।

(अनुवर्तते)

## सर्वेभ्यः 'सप्तगिरि' पाठकेभ्यः
## सङ्क्रान्तिपर्वणः हार्दाः शुभाशयाः।







# उत्तरायणम्

- श्री पि.यस्.अङ्गदः

चरवाणी - ९४००८३९१३७

उत्तरदिशं प्रति गमनमुत्तरायणम्, एवं दक्षिणादिशं प्रति गमनं दक्षिणायनम्। बहुत्र मेषराशिसङ्क्रमणकालः उत्तरायणकालस्य आरम्भः इति मन्वते। वस्तुतः रात्रेः दैर्घ्यं दिनस्यल्पता यस्मिन् दिवसे, ततोऽग्रिमदिनात् रवेः उत्तरदिशं प्रति गमनम् आरभ्यते। अतः तस्मात् दिनात् उत्तरायणकालो भवति। तच्च मकरसङ्क्रान्तितः उपविंशतिदिनेभ्यः पूर्वमेव स्यात्। किन्तु लोके तावत् मेषसङ्क्रान्तिकालात् उत्तरायणारम्भः इति प्रसिद्धिः। एवं कर्कसङ्क्रान्तेः प्रायः विंशतिदिनेभ्यः प्रागेव दक्षिणदिशं प्रति सूर्यस्य गतिः लक्ष्यते इत्यतः तस्मात् दिनादेव दक्षिणायनस्यारम्भः इति वक्तुं युज्यते, तथापि कर्कसङ्क्रान्तिदिनात् दक्षिणायनस्य आरम्भः इति स्थूलतया परिगण्यते।

आर्षकालादेव भारतवर्षेऽस्मिन् अनेके उत्सवाः अत्यन्तप्राधन्येनैवाचर्यन्ते। गगने सञ्चरितानां खेचराणां गतिवशात् भुवि प्रभावः सन्दृश्यते इति हेतोः सर्वेषामेषामुत्सवानां कालनिर्णयः एतैः ग्रहैरेव सम्भवति। सर्वथा प्रत्यक्षभूतयोः सूर्याचन्द्रमसोः गतिमनुसृत्यैव आधिक्येन सर्वेषामुत्सवानां कालो निर्णीयते। अस्य कालस्य गणना विविधैः कालमानप्रकारैः स्फुटिक्रियते। तदर्थमेव नवविधकालमानानि ऋषिभिः निर्दिष्टानि -

**ब्राह्मं दिव्यं तथा पित्र्यं प्राजापत्यं च गौरवम्।**
**सौरञ्च सावनं चान्द्रमार्क्षं मानानि वै नव॥**

एतेषु नवसु सौरमानम्, चान्द्रमानम्, आर्क्षमानम्, सावनमानम् इति चत्वारि मानानि सर्वव्यवहारेषु उपकृतानि। रवेः गतिमधिष्ठाय कृतं मानं सौरमानम् अर्थात् सूर्यस्यैकांशसञ्चरितः कालः भुवि एकं दिनमिति मन्यते। चन्द्रगतिमधिष्ठाय गणितं मानं चान्द्रमानम् यच्च रविचन्द्रयोः गतिमाश्रित्य गण्यते। तथा चामायां रविचन्द्रयोः समानराश्यंशौ भवतः, अमान्ते सूर्येण सह योगङ्कृत्वा तस्मात् पृथक् सञ्चरितस्य चन्द्रस्य प्रतिद्वादशांशमितसञ्चरणे एका तिथिर्जायते, तच्चैकं चान्द्रदिनमिति गण्यते। एवं नक्षत्रमण्डलस्यैकं परिभ्रमणं यावत्कालेन सिद्ध्यति तदेकं नाक्षत्रं दिनं भवति। सावनञ्च रवेरुदयादुदयं भवति।

ग्रहाणां राशिप्रवेश एव सङ्क्रमणशब्देन व्यवह्रियते। यद्यपि सर्वेषामपि ग्रहाणां सङ्क्रमणं वक्तुं युज्यते। तथापि व्यावहारिकदशायां सूर्यस्य सङ्क्रमणम् अत्यन्तप्राधान्येन परिगण्यते। द्वादशराशिषु सञ्चरितस्य सूर्यस्य एकांशगत्या एकस्य परिगणनया क्रमशः उपत्रिंशदंशैः एकः सौरमासो भवति। आहत्य द्वादशसौरमासेषु षाण्मासिकावधौ सूर्यस्य उत्तरदक्षिणदिग्गमनानुरोधेन अयनव्यवहारः प्रसिद्धः। रवेः

वृष्ट्याधिक्यात् कृषिनाशादिदुष्फलानि अनुभूतात् दक्षिणायनात् फलमूलादीनां कार्षिकवस्तूनां सम्पत्तये युज्यमानस्य उत्तरायणस्य आगमः उत्सवत्वेनैव मन्यते। अतः भारतवर्षे सामान्यतया कथ्यमानेन मकरसङ्क्रमणम् इति नाम्ना उत्तरायणारम्भस्य अधिकतया प्रसिद्धिर्वर्तते। एतदतिरिच्य भारतवर्षस्य विविवधप्रदेशेषु विभिन्नैः नामभिः अयमुत्सव आचर्यते। यथा दक्षिणभारते 'तमिल्नाडुराज्ये पोङ्गल्', असामराज्ये बिहु, पञ्जाबराज्ये लोहडी, गुजरातराज्ये उत्तरायन् इत्यादिप्रकारैः मकरसङ्क्रमणम् आचर्यते चेदपि अस्य मुख्योद्देशः उत्तरायणकालस्य स्वागतीकरणमेव। महाभारतयुद्धकाले शरशय्यागतः भीष्मः स्वप्राणत्यागाय उत्तरायणकालागमनं प्रत्यैक्षत इति सर्वप्रसिद्धमैतिहासिकम् उदाहरणं भवति। तस्मादेव उत्तरायणस्य वैशिष्ट्यं शिष्टैः मन्यते। उक्तञ्च भगवता अर्जुनोपदेशवेलायां श्रीमद्भगवद्गीतायाम् अष्टमाध्याये यत्

**अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम्।**
**तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः॥** इति।

कृतेभ्यः पापकर्मभ्यः मुक्तये पुण्यकर्माणि विधातव्यानि, सुनिश्चिते काले कृतकर्मभ्यः शुभफलावाप्तिः स्यात्। अतः अस्मिन् उत्तरायणकाले सत्कर्म कुर्वन्तः धर्ममार्गमनुसरन्तो वयम् जगद्धिताय सत्वगुणाश्रिताः भवेम इति प्रार्थयामहे।





# बहुमुख्या भावना

- श्री श्रीपादाचार् जोषि
चरवाणी - ९२९७४०४८८०

एकस्मिन् गिर्जाघरे एकः धर्मपिता न्यवसत्। सः यदा कदा समीपस्थप्रदेशेषु गत्वा धर्मप्रचारं करोति स्म। बहूनि वर्षाणि धर्मप्रचारं कुर्वन् सः क्रमेण दौर्बल्यम् अन्वभवत्। यौवनं गतम्, जरा समागता, केशाः पलिताः दन्ताश्च निपतिताः। खाद्यपदार्थान् सुकरतया अशितुं तेन कृत्रिमा दन्तावली निर्मापिता। भोजनान्ते स तां दन्तावलीम् उदपाने वा चषके वा निदधाति स्म।

एकस्मिन् दिने सः रात्रिभोजनं कृत्वा अशेत। तदा मनाक् उदरपीडा अभवत्। शय्याया उत्थाय असौ समीपस्थचषके दन्तावलीम् अपश्यत् किन्तु सा तत्र न आसीत्।

तेन चिन्तितम्, रात्रौ भोजनान्ते सम्भवतः मया दन्तावली मुखात् न निष्कासिता। नूनं सा मम उदरे गता। एषा उदरपीडा अपि दन्तावलीनिगरणात् सम्भवति। यथा यथा सः धर्मपिता इमं विचारं दृढीचकार, तथा तथा तस्य पीडा अपि अवर्धत। पीडया सः उच्चैः अक्रोशत्।

चीत्कारशब्दं श्रुत्वा तत्पत्नी भयान्विता तत्र समागत्य पृष्टवती किं घटितम्? ब्रूहि! शीघ्रं ब्रूहि! इति।

रुदन् इव धर्मपिता उवाच-रात्रौ शयानस्य मम मुखे दन्तावली आसीत्। तां निद्रावस्थायां निगीर्णवान् अस्मि। किं करोमि? क्व गच्छामि। उदरं पीडया निकृत्यते। चिकित्सकम् आनय।

चिकित्सकः आगत्य सर्वम् अश्रृणोत् अवदत् च पीडा निवारकम् अगदं ददामि किन्तु प्रभाते शल्यचिकित्सकम् आह्वयन्तु!

शल्यचिकित्सकाः आगत्य रोगिणः दशां दृष्टवन्तः कथितवन्तः च, यत् बृहदाकारा दन्तावली कथम् अपि निगरीतुं न शक्यते। सा क्वचिद् अन्यत्र स्थापिता भवेत्।

चिकित्सकानां परामर्शम् अश्रृण्वन् इव रोगी भूयः रुरोद उवाच च - यस्य पीडानुभूतिः भवति स एव जानीते, कथम् अन्ये तां विदुः? भवन्तः त्वरितम् शल्यकर्म कुर्वन्तु।

ते चिकित्सका अन्तर्हसन्तः कृत्रिमां शल्यचिकित्सां कर्तुं सज्ञा जाताः। रोगिणम् आयसे शयने अशाययन्। शल्यशस्त्राणि उष्णजले अतापयन्। स्वमुखेषु श्वेतपटखण्डम् च अबध्नन्।

यदा ते शल्यकर्मणे सज्ञां कुर्वन्ति स्म, तदैव रोगिणः गृहात् तत्पत्न्याः एषः दूरभाषासन्देशः प्राप्तः यत् बिडाल्या अपनीता दन्तावली गृहाङ्गणे मिलिता। शल्यकर्म न कुर्वन्तु।

एतद् आकर्ण्य रोगी स्वस्थ इव स्वयं शयनाद् उत्तस्थौ निजगाद च, सम्प्रति आत्मानं स्वस्थम् अनुभवामि। उदरवेदनाऽपि नास्ति। भवद्भिः इह आगत्य यः अनुग्रहः दर्शितः, तदर्थम् भूयांसः धन्यवादाः।






# त्यागराजकीर्तनम्

तेलुगु मूलम् - डा.कंपल्ले रविचन्द्रन्
चित्राणि - तुम्बलि शिवाजी
संस्कृतानुवादः - श्री वि.प्रदीपकुमारः
चरवाणी - ९४९१६४६५३२






























अग्रिमसंचिकायां श्रीवेङ्कटेशस्य दिव्यलीलाविलासान्तरं दृष्ट्वा धन्याः भवेम...

स्वस्ति

# रसप्रश्नाः

१. प्राचेतस इति कस्य नाम?
अ. व्यासस्य आ. गौतमस्य
इ. वाल्मीकेः ई. दशरथस्य

२. एतेषु आर्षरामायणं किं भवति?
अ. योगवासिष्ठम् आ.अध्यत्मरामायणम्
इ. अद्भुतरामायणम् ई.आनन्दरामायणम्

३.''नूपुरे त्वभिजानामि नित्यं पादाभिवन्दनात्'' इति केनोक्तम्?
अ. रामेण आ.सुग्रीवेण
इ. हनुमता ई. लक्ष्मणेन

४. ''जननी जन्मभुमिश्च स्वर्गादपि गरीयसी'' इति कस्य वचनम्?
अ. रामस्य आ.लक्ष्मणस्य
इ.विभीषणस्य ई. रावणस्य

५. रामचन्द्रस्य कुलगुरुः कः आसीत्?
अ. विश्वामित्रः आ. कपिलः
इ. वसिष्ठः ई. भार्गवः

६.रामायणे कति श्लोकाः सन्ति?
अ. २२००० आ. १२०००
इ. २४००० ई. २५०००

७. वाल्मीकेः पूर्वनाम आसीत्?
अ. हरिहरः आ. मायाधरः
इ. रत्नाकरः ई. नीलकण्ठः

८. रामायणे अङ्गीरसः कः?
अ. शृङ्गारः आ.वीरः
इ. करुणः ई. शान्तः

समाधानानि - १.इ २.आ ३.ई ४.आ ५.इ ६.इ ७.इ ८.इ

## चित्रलेखनम्

अस्य चित्रपटस्य रञ्जनं कुर्मः वा?

प्रदत्तं चित्रपटम् अधोनिर्दिष्टप्रदेशे स्थापयामो वा?

Printed by Sri P. Ramaraju, M.A., and Published by Dr. K. Radha Ramana, M.A., M.Phil., Phd., on behalf of Tirumala Tirupati Devasthanams and Printed and Publised at Tirumala Tirupati Devasthanams Press, K.T. Road,Tirupati 517 507.
Editor : Dr.V.G. Chokkalingam, M.A., Ph.D.



SAPTHAGIRI (SANSKRIT) ILLUSTRATED MONTHLY PUBLISHED BY TIRUMALA TIRUPATI DEVASTHANAMS
PRINTING ON 25-12-2021 & posting at Tirupati RMS Regd.with the Registrar of Newspapers for India under RNI No.21138/1970 Postal Regd. No. TRP/154/2021-2023"
LICENCED TO POST WITHOUT PREPAYMENT No.PMGK/RNP/WPP-04(4)/2021-2023"
Posting on 5th of every month.

बण्टुरीति कोलु वीयवय्य राम
तुण्टविण्टि वानि मोदलैन मदा
दुल बट्टि नेल गूलजेयु निज
बण्टुरीति कोलु वीयवय्य राम

(श्रीत्यागराजकीर्तनम्)